एतच्छास्त्रमकाण्ड मृत्युपाशच्छेदनम्—

एतद्धि[1] मृत्युपाशानामकांडे छेदनं दृढम् ।
रोगोत्त्रासितभीतानां रक्षासूत्रममूत्रकम् ॥ ७४ ॥

चिकित्साशास्त्रंमृत्युञ्जयेऽमृतम्—

एतत्तदमृतं साक्षाज्जगत्यायासवर्जितम् ।
याति हालाहलत्वं च सद्यो दुर्भाजनस्थितम् ॥ ७५ ॥

कुवैद्यानांत्याग :—

[2]अज्ञातशास्त्रसद्भावान् शास्त्रमात्रपरायणान् ।
त्यजेद्दूराद् भिषक्पाशान् पाशान् वैवस्वतानिव ॥ ७६ ॥

सुवैद्यानां भद्रम्—

भिषजा साधुवृत्तानां भद्रमागमशालिनाम् ।
अभ्यस्तकर्मणा भद्रं भद्रं भद्राभिलाषिणाम् ॥ ७७ ॥

मन्त्रवदेतस्यप्रयोग :—

[3]इति तंत्रगुणैर्युक्तं तंत्रदोषविवर्जितम् ।
चिकित्साशास्त्रमखिलं व्यापठ्य परितः स्थितम् ॥ ७८ ॥

विपुलामलविज्ञानमहामुनिमतानुगम् ।
महासागरगंभीरसंग्रहार्थोपलक्षणम् ॥ ७९ ॥

---

१ एतत् चिकित्सातन्त्रम् । अकाण्डेऽकाले । असूत्रकंसूत्ररहितम् । आयासेन परिश्रमेण वर्जितम् । जगत्प्रसिद्धममृतंतु क्षीरोदं प्रमथ्य सुरासुरैरुत्पादितमिदं-चिकित्साशास्त्रममृतंतु आयासरहितम् । २ अज्ञातः शास्त्रस्य सद्भावस्तत्वार्थो-यैस्तान् । सामान्यतः शास्त्रपाठमात्रतत्परान्, अदृष्टकर्मणः । भिषक्पाशान् निन्दित वैद्यान् । वैवस्वतान् यमसम्बन्धिनः । ३ तन्त्रगुणास्तन्त्रयुक्तयः द्वात्रिंशत्संख्याकाः । तन्त्रदोषैरप्रसिद्धशब्दादिभिर्वर्जितम् । महासागर इवगम्भीरो यः सङ्ग्रहार्थोऽष्टाङ्ग संग्रहस्तस्योपलक्षणमुपायभूतम् ।

दैवयोगात् क्वचिदसिद्धि :—

[1]अप्येवोपाययुक्तस्य धीमतो जातुचित्क्रिया ।
न सिध्येद्दैववैगुण्यान्न त्वियं षोडशात्मिका ॥ ६७ ॥

दृष्टान्त :—

कस्यामिद्धोऽग्निर्तोयादि: स्वेदस्तंभादिकर्मणि ।
न प्रीणनं कर्शनं वा कस्य क्षीरं गवेधुकम् ॥ ६८ ॥

कस्य मायात्मगुप्तादौ वृष्यत्वे नास्ति निश्चयः ।
विण्मूत्रकरणाक्षेपौ कस्य संशयितौ यवे ॥ ६९ ॥

विषं कस्य जरां याति मंत्रतंत्रविवर्जितम् ।
कः प्राप्तः [3]कल्यतां पथ्याद्दते रोहिणिकादिषु ॥ ७० ॥

चिकित्सातन्त्रस्य साफल्यम्—

अपि चाकालमरणं सर्वसिद्धांतनिश्चितम् ।
महतापि प्रयत्नेन वार्यतां कथमन्यथा ॥ ७१ ॥

ज्वरेलङ्घनबृंहण शास्त्रसिद्धे—

चंदनाद्यपि दाहादौ रूढमागमपूर्वकम् ।
शास्त्रादेव गतं सिद्धिं ज्वरे लंघनबृंहणम् ॥ ७२ ॥

चिकित्सितेसंशयोनैवकर्तव्य :—

चतुष्पाद्गुणसंपन्ने सम्यगालोच्य योजिते ।
[4]मा कृथा व्याधिनिर्घातं विचिकित्सां चिकित्सिते ॥ ७३ ॥

---

१ यत्र दैवे प्रतिकूले कदाचिन्नक्रिया सिद्ध्यति तत्र दैवमेवप्रतिबन्धकं कारणं, न तु षोडशात्मिकायाश्चिकित्सायाविफलत्वमित्यर्थः । २ अग्निः स्वेदकर्मणि, तोयं च स्तम्भने । क्षीरंप्रीणनं-तर्पणं, गवेधुकं-क्षौद्रवान्नं कर्शनम् । ३ कल्यता मारोग्यम् । ४ व्याधिनिर्घातं प्रति विचिकित्सा-संशयं माकृथाः ।

अथ चरकविहीनः प्रक्रियायामखिन्नः
किमिव खलु करोतु [1]व्याधितानां वराकः ॥ ८४ ॥

आधुनिककविकृतग्रन्थाभ्यासे युक्तिस्तस्माद् सुमतिभिरेतद्ग्राह्यम्—

[2]अभिनिवेशवशादभियुज्यते
सुभणितेऽपि न यो दृढमूढकः ।
पठतु यत्नपरः पुरुषायुषं
स खलु वैद्यकमाद्यमनिर्विदः ॥ ८५ ॥

वाते पित्ते श्लेष्मशान्तौ च पथ्यं
तैलं सर्पिर्माक्षिकं च क्रमेण ।
एतद् ब्रह्मा भाषते ब्रह्मजो वा
[3]का निर्मन्त्रे वक्तृभेदोक्तिशक्तिः ॥ ८६ ॥

अभिधातृवशात् किं वा द्रव्यशक्तिर्विशिष्यते ।
अतो [4]मत्सरमुत्सृज्य माध्यस्थ्यमवलम्ब्यताम् ॥ ८७ ॥

---

१ व्याधितानां-कासश्वासाद्यभिभूतानाम् । वराकोऽल्पबुद्धिः । अष्टाङ्गहृदये तु चरकोक्तप्रक्रियायाः प्रतिपादनात्सुश्रुतोक्तरोगाभिधानाच्च एतदध्येता रोगचिकित्सायां प्रवर्तमानो रोगशान्तिं ध्रुवं विदधात्येव ।

२ अभिनिवेशो वस्तुपक्षपातः । नाभियुज्यते मनोयोगं न करोति । आद्यं प्रथमप्रणीतं लक्षमितं ब्रह्मोक्तं वैद्यकम् । पुरुषायुषं वर्षशतम् । अनिर्विदोऽखिन्नः ।

३ निर्मन्त्रे मन्त्रभिन्ने-वातादिनाशके तैलादौ । वक्तृभेदो विशेषस्तदुक्त्या शक्तिर्नकाचित् । मन्त्रस्तु ऋषिप्रोक्तःशक्तिमत्तमः, परं तैलादि वातादिनाशकमितिमहर्षिः कथयेदथवा ऋषिभिन्नस्तत्र न कोऽपि विशेष इत्यर्थः ।

४ मत्सरं द्वेषम् । माध्यस्थ्यं पक्षपातराहित्यम् ।

अथ नरकविहीनः प्रक्रियायामखिन्नः
किमिव खलु करोतु [1]व्याधितानां वराकः ॥ ८४ ॥

आधुनिककविकृतग्रन्थाभ्यासे युक्तिस्तस्माद् सुमतिभिरेतद्ग्राह्यम्—

[2]अभिनिवेशवशादभियुज्यते
सुभणितेऽपि न यो दृढमूढकः ।
पठतु यत्नपरः पुरुषायुषं
स खलु वैद्यकमाद्यमनिर्विदः ॥ ८५ ॥

वाते पित्ते श्लेष्मशान्तौ च पथ्यं
तैलं सर्पिर्माक्षिकं च क्रमेण ।
एतद् ब्रह्मा भाषते ब्रह्मजो वा
[3]का निर्मन्त्रे वक्तृभेदोक्तिशक्तिः ॥ ८६ ॥

अभिधातृवशात् क्रिया द्रव्यशक्तिर्विशिष्यते ।
अतो [4]मत्सरमुत्सृज्य माध्यस्थ्यमवलंब्यताम् ॥ ८७ ॥

---

१ व्याधितानां-कामश्वासाद्यभिभूतानाम् । वराकोऽल्पबुद्धिः । अष्टाङ्गहृदये तु चरकोक्तप्रक्रियायाः प्रतिपादनात्सुश्रुतोक्तरोगाभिधानाच्च एतदध्येता रोगचिकित्सायां प्रवर्तमानो रोगशान्तिं ध्रुवं विदधात्येव ।

२ अभिनिवेशो वस्तुपक्षपातः । नाभियुज्यते मनोयोगं न करोति । आद्यं-प्रथमप्रणीतं लक्षमितं ब्रह्मोक्तं वैद्यकम् । पुरुषायुषं वर्षशतम् । अनिर्विदोऽखिन्नः ।

३ निर्मन्त्रे मन्त्रभिन्ने-वातादिनाशके तैलादौ । वक्तृभेदो विशेषस्तदुक्त्या शक्तिर्नकाचित् । मन्त्रस्तु ऋषिप्रोक्तःशक्तिसम्पन्नः, परं तैलादि वातादिनाशकमितिमहर्षिः कथयेदथवा ऋषिभिन्नस्तत्र न कोऽपि विशेष इत्यर्थः ।

४ मत्सरं द्वेषम् । माध्यस्थ्यं पक्षपातराहित्यम् ।

# टिप्पणीकर्तुर्निवेदनम्

प्रेम्णोन्नीतसदौषधीशमनिशं पीयूषपूराञ्चितम्
संश्लिष्टं गिरिराजकल्पलतया मृत्युञ्जयं शङ्करम् ।
नित्यं दिव्यरसायनं सुरतरुं ह्यायुष्यनैरुज्ययो—
रायुर्वेदशिवं शरण्यमशिवध्वंसाय वन्दामहे ॥ १ ॥

स्फुरद्राजस्थानं भरतवसुधाभालतिलकम्
समृद्धं यत्रास्ते जयपुरमतिख्यातविरुदम् ।
पिलोदग्रामस्तत्सविधमथ गौडद्विजवरैः
श्रितो, यस्मिन् विद्वानजनि जयकृष्णो गुणनिधिः ॥ २ ॥

तदात्मजः श्रीयुतपूर्णदत्तः
प्रशस्तविद्याचरितैरमत्तः ।
जातो यशस्वी सुजनाभिवन्द्यो-
वन्द्यो विदामार्जवशोभिशीलः ॥ ३ ॥

शम्भोर्मूर्ध्नि धृतापि यच्चरणयोः प्रक्षालनं कुर्वती
गङ्गा हर्षतरङ्गितेव वहते यत्रोत्तरप्रक्रमा ।
लुप्ता चापि सरस्वती परिसरे यस्याश्चिरात्स्यन्दते ॥
साविश्वेश्वरवल्लभा विजयते वाराणसी मुक्तिदा ॥ ४ ॥

अस्यां भद्रवनी (भदैनी) सुभद्रविबुधावासस्थली पावनी
यस्यामास भिषग्वरो ममपिता श्री पूर्णदत्ताभिध. ।
नित्यं पुण्यचिकित्सयाऽत्र जनताव्याधीन्समुद्धूलयं-
ल्लोके ख्यातिमुपेयिवान्निरुपमां सर्वाभिनन्द्यो भवन् ॥ ५ ॥

तस्यात्मजः प्रवीणप्राज्ञानां सेवने सक्तः ।
अधिगतवैद्यकविद्यो निरवद्यो भव्यगोष्ठीषु ॥ ६ ॥

आयुर्वेदाचार्यः श्रीहरिनारायणः शर्मा ।
बी०एन्० मेहता विश्रुत संस्कृत *विद्यालयाध्यक्षः ॥ ७ ॥

तेन प्रभाभिधाना रचिता रुचिराथ टिप्पणी पुण्या ।
अष्टाङ्गहृदयनामा ग्रन्थो यत्सङ्गतो भाति ॥ ८ ॥

अन्तस्तमो विदामप्यस्येत् किरणाङ्कुरो यस्याः ।
सैषा कृतिर्मदीया प्रीत्यै भूयान्महेश्वरस्य ॥ ९ ॥

---

* प्रतापगढ़ (अवध) स्थितः ।

अथ चरकविहीनः प्रक्रियायामखिन्नः
किमिव खलु करोतु [1]व्याधितानां वराकः ॥ ८४ ॥

आधुनिककविकृतग्रन्थाभ्यासे युक्तिस्तस्मात् सुमतिभिरेतद्ग्राह्यम्—

[2]अभिनिवेशवशादभियुज्यते
सुभणितेऽपि न यो दृढमूढकः ।
पठतु यत्नपरः पुरुषायुषं
स खलु वैद्यकमाद्यमनिर्विदः ॥ ८५ ॥

वाते पित्ते श्लेष्मशान्तौ च पथ्यं
तैलं सर्पिर्माक्षिकं च क्रमेण ।
एतद् ब्रह्मा भाषते ब्रह्मजो वा
[3]का निर्मन्त्रे वक्तृभेदोक्तिशक्तिः ॥ ८६ ॥

अभिधातृवशात् किं वा द्रव्यशक्तिर्विशिष्यते ।
अतो [4]मत्सरमुत्सृज्य माध्यस्थ्यमवलंब्यताम् ॥ ८७ ॥

---

१ व्याधितानां-कामश्वासाद्यभिभूतानाम् । वराकोऽल्पबुद्धिः । अष्टाङ्गहृदये तु चरकोक्तप्रक्रियायाः प्रतिपादनात्सुश्रुतोक्तरोगाभिधानाच्च एतदध्येता रोगचिकित्सायां प्रवर्तमानो रोगशान्तिं ध्रुवं विदधात्येव ।

२ अभिनिवेशो वस्तुपक्षपातः । नाभियुज्यते मनोयोगं न करोति । आद्यं-प्रथमप्रणीतं लक्षमितं ब्रह्मोक्तं वैद्यकम् । पुरुषायुषं वर्षशतम् । अनिर्विदोऽखिन्नः ।

३ निर्मन्त्रे मन्त्रभिन्ने-वातादिनाशके तैलादौ । वक्तृभेदो विशेषस्तदुक्त्या शक्तिर्न काचित् । मन्त्रस्तु ऋषिप्रोक्तःशक्तिमत्तमः, परं तैलादि वातादिनाशकमितिमहर्षिः कथयेदथवा ऋषिभिन्नस्तत्र न कोऽपि विशेष इत्यर्थः ।

४ मत्सरं द्वेषम् । माध्यस्थ्यं पक्षपातराहित्यम् ।